# संस्कृत-वार्ताः

दिनाङ्कः **24-12**-2020 प्रातः **- 06: 55**

मुख्य-वार्ताः

- भारतेन स्पष्टीकृतं यद् ऐषमो भारत-शिखरोपवेशनं कोविड-वार्षिक-रूस-19 इति वैश्विक संक्रमण कारणात् नैव जातम् इति उभाभ्यामपि राष्ट्राणां परस्पर-सहमतिपरो निर्णयोऽवर्तत। रूस देशीयेन राजदूतेन स्पष्टीकृतं यत् संक्रमणकालेऽपि उभयोर्देशयोर्सम्बन्धाः यथावस्थामेव प्रवर्तन्ते।
- प्रधानमन्त्री नरेन्द्रमोदी श्वः शुक्रवासरे दृश्यश्रव्यपरान्तर्जालीय-माध्यमेन प्रधानमन्त्री किसान समान-निधि इति योजनान्तर्गतं वित्तीय-लाभपदं मासदेयं प्रवर्तायिष्यते। कृषकैः साकं प्रधानमन्त्रिणः सवादोऽपि अनुष्ठास्यते असौ।
- प्रधानमन्त्री मोदी अद्य प्रातः एकदाश-वादने विश्वभारतीय विश्वविद्यालयस्य शताब्दी समारोहं सम्बोधियिष्यते। गत शताब्दस्य एकविंशे वर्षे गुरुणा रवीन्द्रनाथठाकुरेण विश्वविद्यालयोऽयं संस्थापितः आसीत्।
- कोविड-19 इति वैश्विकसंक्रमणं धूलीसात्-कर्तुं कोरोना-प्रतिरोधी-वीराणां प्रयासैः साकल्यं यान्ति। साम्प्रतं कोरोना प्रत्यवाप्तिमितौ परिवकारः विवर्ध्य प्रतिशतं षड् नव दशमलवोत्तर षण्णवति मितः समजायत।

------------

कोविड ओपनिंग

कोरोणामहामार्याः विरुद्धं देशः ऐक्यभावनया युद्ध्यते। भवन्तोऽपि अस्माभिः सह सुरक्षायाः उपायत्रयस्य संकल्पं स्वीकुर्वन्तु

- मुखावरंक सन्धारयन्तु –
- सामाजिकदौर्यं परिपालयन्तु,
- पाणिपादं च यथासमयं प्रक्षालयन्तु।

वार्ताः विस्तरेण।

भारत-रूस

भारतेन स्पष्टीकृतं यद् ऐषमो भारत-रूस-वार्षिक-शिखरोपवेशनं कोविड-19 इति वैश्विक संक्रमण कारणात् नैव जातम् इति उभाभ्यामपि राष्ट्राणां परस्पर-सहमतिपरो निर्णयोऽवर्तत। भारत-रूस-वार्षिक शिखरोपवनविषये अवोचन् विदेश मन्त्रालयस्य प्रवक्ता अनुरागश्रीवास्तवो

अचकथत् यत्-असत्यपरं भ्रामकं च वृत्त-प्रसारणं नैवास्ति उचितम्। रूसीदेशीयेन राजदूतेनापि भारत-रूस-शिखरोपवेनं समाश्रित्य प्रकाशितः लेख वास्तविक-तथ्यरहितः प्रतिपादितः। तेन प्रोक्तं कोविड-19 इति वैश्विक-संक्रमण-अवधौ अपि उभयोर्देशयोः सम्बन्धाः प्रगतिपथि यथावस्थमेव प्रवर्तन्ते।

प्रधानमन्त्री-किसान

प्रधानमन्त्री नरेन्द्रमोदी श्वः शुक्रवासरे दृश्यश्रव्यपरान्तर्जालीय-माध्यमेन प्रधानमन्त्री किसान समान-निधि इति योजनान्तर्गतं वित्तीय-लाभपदं मासदेयं प्रवर्तायिष्यते। प्रधानमन्त्रिणः मोदिनो अनेन पदक्षेपेण एकस्मिन् एव क्षणे नव कोट्यधिक लाभार्थि-कृषकेभ्यः अष्टादश-सहस्र-कोटि रूप्यकाणां हस्तान्तरणं भविता। आयोजनावधौ कृषकैः साकं प्रधानमन्त्रिणः सवादोऽपि अनुष्ठीयते। कृषकाः योजनायै अस्यै स्वीयविचारान् प्रकटयिष्यन्ति अपि च कृषकेभ्यः प्रारब्धयोजनानां विषये स्वीयमतं उपस्थास्यन्ते। अवसरेऽस्मिन् केन्द्रीय-कृषि-कृषक-कल्याण मन्त्री नरेन्द्रसिंह तोमरोऽपि उपस्थितो भविता। अवधेयं अस्ति यत् एतद् योजनान्तर्गतं षड् सहस्र-सहस्ररूप्यकाणां वित्तीयलाभः प्रदीयते।

प्रधानमन्त्री-विश्वभारती

प्रधानमन्त्री नरेन्द्रमोदी अद्य प्रातः एकादशवादने शान्तिनिकेतनस्थ विश्वभारती विश्वविद्यालयस्य शताब्दी समारोहं समबोधयिष्यते। अवसरेऽस्मिन् पश्चिमबंगालराज्यीयो राज्यपालः केन्द्रीय-शिक्षामन्त्री च उपस्थितः भविष्यतः। अवधेयं तथ्यमिदं विश्वभारती विश्वविद्यालयः केन्द्रीय विश्वविद्यालयः राष्ट्रिय-आवश्यकतानुगुणपरो विश्वविद्यालयो वर्तते यद्धि गतशताब्दस्य एकविंशति वर्षे गुरुणा रवीन्द्रनाथ टैगोरेण संस्थापितः आसीत्।

कोविड

कोविड-19 इति वैश्विकसंक्रमणं धूलीसात्-कर्तुं कोरोना-प्रतिरोधी-वीराणां प्रयासाः साफल्यं यान्ति। साम्प्रतं कोरोना प्रत्यवाप्तिमितौ परिष्कारः विवर्ध्य प्रतिशतं षड् नव दशमलवोत्तर षण्णवति मितः समजायत। विगते अहोरात्रे षड्विंशति सहस्राधिकाः जनाः स्वस्थीभूताः। अनेन सहैव कोविड-19 इति वैश्विक संक्रमणात् स्वस्थीभूय-मानानां संख्या विवर्ध्य त्रिषष्ट्यधिक-षण्णवति लक्षाधिका संवृत्ता। अधुना देशे सक्रिय-प्रकरणानि त्रिलक्षतोप्यवधो वर्तते।

मन की बात

प्रधानमन्त्री नरेन्द्रमोदी आगामि रविवासरे पूर्वाह्णे एकादश वादने स्वीये मन की बात इति मासिक कार्यक्रमे राष्ट्रवासिभिः साकं विचार-विनिमयं करिष्यति। इदं हि अस्य वर्षस्य अन्तिमो मन की बात कार्यक्रमो विद्यते। अवधेयं प्रधानमन्त्री प्रत्येकं मासस्य अन्तिमे रविवासरे देशवासिभिः साकं आकाशवाण्या प्रसारिते मन की बात कार्यक्रमे विचार-विनिमयं करोति।

॥ इति वार्ताः ॥